अथवा देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः[1] ।
[2]यथैवाज्ञापयेद्भर्ता तदा योज्यमसंशयम् ॥९७॥
[3]तथा समुदिताश्चैव विज्ञेया नाटकाश्रिताः ।
पात्रं प्रयोगमृद्धिश्च विज्ञेयास्तु त्रयो गुणाः ॥९८॥
[4]बुद्धिमत्त्वं सुरूपत्वं लयतालज्ञता तथा ।
रसभावज्ञता चैव वयस्स्थ[5]त्वं कुतूहलम् ॥९९॥
ग्रहणं धारणं चैव [6]गात्रावैकल्यमेव च ।
निजसाध्वसतोत्साह इति पात्रगतो विधिः ॥१००॥
सुवाद्यता सुगानत्वं सुपाठ्यत्वं तथैव च ।
शास्त्रकर्मसमायोगः प्रयोग इति संज्ञितः[8] ॥१०१॥
[9]शुचिभूषणतायां तु माल्याभरणवाससाम् ।
[10]विचित्ररचना चैव समृद्धिरिति संज्ञिता ॥१०२॥
यदा [11]समुदिताः सर्वे एकीभूता भवन्ति हि ।
अलङ्काराः [12]सकुतपा मन्तव्यो नाटकाश्रयाः ॥१०३॥

---

**देशकालाविति** । नेपथ्ये पाठः यत्कर्तुं जानाति **तेन योग** इति **पात्रसंपाद्य**-न्तर्भावोऽस्य । पात्रं हि रसप्रविष्टमेव । **यदा समुदिता** इति सामान्याभिनय-त्वमाह । अध्यायपञ्चकेन हि तदेवोक्तम् । नाट्योत्पत्तिरिव पूर्वरङ्गान्तेनेत्युक्तम् ।

---

1. KSS. कदाचन ।
2. NS. यदा । KSS. यत्र च ।
3. KSS. यथा समुदयश्चैव प्रयोगाश्च समृद्धयः ।
4. KSS. बुद्धिसत्त्वस्वरूपं च । NS. बुद्धिः सत्त्वं सुरूपत्वं ।
5. NS. स्वत्वकुतहूलम् ।
6. KSS. गानं नाट्यकृतं तथा ।
7. KSS. जितसाध्वसतोत्साहाविति । NS. जितसाध्वसतोत्साह ।
8. NS. सम्प्रकीर्तितः KSS. स तु संज्ञितः ।
9. KSS., NS. सुविभूषणता या तु सुमाल्याम्बरता तथा ।
10. KSS. यात्वङ्गरचना चैव NS. विचित्रा रचना चैव······स्मृता ।
11. KSS. सर्वे सुमुदिता । NS. समुदयाः सर्वे ।
12. NS. स तु तदा KSS. स तु तदा मन्तव्यो नाट्ययोक्तृभिः ।

[1]एतदुक्तं द्विजश्रेष्ठाः सिद्धीनां लक्षणं मया ।
अत ऊर्ध्वं प्रवक्ष्याम्यातोद्यानां च विकल्पनम्[2] ॥१०४॥

इति भरतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नाम
सप्तविंशोऽध्यायः

---

वक्ष्यति च अलङ्कार इति शोभापूर्णतायाश्चतुरित्यर्थः ।

वक्तव्यशेषं सूचयति अत ऊर्ध्वमित्यादि । शिवम् ॥

नृसिंहगुप्तापरनामधेय-
विद्यावदातः सुखलाभिधानः ।
यं देहविद्यभिरयूयुजत्सः
प्रयोगसिद्धिं कृतवान् महार्थाम् ॥

इति श्रीकाश्मीरमहामाहेश्वराचार्याभिनवगुप्ताचार्यविरचितायां
अभिनवभारत्यां नाट्यवेदवृत्तौ सिद्धयध्यायः सप्तविंशः ॥

— ० —

---

1. KSS. एतदुक्तं मया सम्यक् सिद्धीनां लक्षणं द्विजाः ।
2. KSS. ह्यातोद्यानां विकल्पनम् ।

# INDEX OF HALF VERSES OF THE NATYASASTRA

